संस्कृत प्रशिक्षणवर्गः

८-२७ अक्टोबर १९९२

विकास शाला

शिवमोग्गा

होवें सत्यनारायण

शास्त्री

ॐ

७ २

८-१०-९१

८.३० उद्घाटनम्
मुख्यातिथिः - श्री बन्नञ्जे गोविन्दाचार्याः
अध्यक्षः - डा॰ N. श्रीधरः

१०.०० गोष्ठी - जनार्दन हेगडे चमूः
परिचयात्मिका गोष्ठी

११.३० गोष्ठी - सो.ति. नागराजाः चर्चा
संस्कृतसम्भाषणस्य आवश्यकता

२

२२.०० गणशः विभज्य गोष्ठ्यः

१. 'सरलं' संस्कृतं नाम किम् ?

२. सरलीकृताः अंशाः (अस्माभिः

भूतकालक्रियापदरूपाणां स्थाने
क्तवतु प्रयोजनेन लाभाः के
पुरुषभेदो नास्ति। भवान् - भवती
सादृश्येन क्तवतु शब्दानां ग्रहणं सुल
अद्यतनाद्यतनभेदाः न सन्ति। उपसर्गयोगे क्लेशः
नास्ति।

३.३० गोष्ठी - विश्वास
संस्कृतभाषाबोधनपद्धतीनां इतिहा

व्याकरणानुवाद पद्धतिः

~~स्वाभ~~ स्वाभाविक पध्दतिः

प्रत्यक्षपद्धतिः

वर्गे सं.सं. शिबिर प्रात्यक्षिके वर्गार्थिनां
धारणा

९.३० क्रीडादिक्रम् - गणशः विभज्य

६.०० संस्कृतसंभाषणशिबिरम् - २
शिक्षकः - रामकृष्णः तद्दलसे

गतिविधि
① Presentation - कथं पाठबिन्दुं उपस्थापयति
① उपस्थापनं
② Practise - अभ्यासं कथं कारयति।
② अभ्यासः
③ Production - छात्राः कथं उत्तरन्ति।
③ प्रयोगः तैः कियत् अवगतम्।

प्रथमार्धं
अहं भवान् भवती कः
सः सा का तत् किम्
नाम
अस्ति आं न / नास्ति
अत्र तत्र कुत्र सर्वत्र
एकत्र अन्यत्र

उत्तरार्धं आवश्यकं। पर्याप्तं। किंचित
मास्तु।

तस्य। कस्य। अस्य। अस्याः। तस्याः।

४

## षष्ठी विभक्ति प्रयोगाः

एतस्य । एतस्याः । कस्याः ।
पिता । पत्नी । वा ? । ज्येष्ठपुत्र
दशरथस्य । रामस्य । अनुजः
माता । सीतायाः । पतिः ।
कस्याः । भवतः
गच्छति । आगच्छति । उपविश
उत्तिष्ठति । किं करोति ?
आगच्छामि । गच्छामि । उपविशा
ददामि । स्वीकरोमि । नयति ।
आनयति । ददाति ।
लिखामि । पतति । पठा

चषकः । फेनकपेटिका । घटी ।

कथा – गतानुगतिको लोक
प्रत्येकः छात्रः वाक्यमेकं उक्त

९.२८) अनौपचारिकम्

पर्वतराजः, होक्कुः, लक्ष्मीनारायणभट्टः,

संगठनम् । प्रचारोपायाः (२ अवधी)
कार्यकर्तॄणां वर्धनम् निर्माणम्
(संस्कृताध्ययनं किमर्थम्)
(कार्यक्रमाणां आयोजनम्)
व्यवस्था

३-१०-९२
८.३० मया संसां शिबिरं चालितम् ।
८.३० गोष्ठी - चमूकृष्णशास्त्री
संस्कृतम् सामाजिकपरिस्थितिश्च

६

१०.०० गोष्ठी - रामकृष्णः

ह्यस्तन संसं शिबिरस्य विश्लेषणम्

① पाठबिन्दुः कथं उपस्थापितम्?

② पाठबिन्दुः कथं अभ्यासितम्

③ पाठबिन्दुः कथं प्रयोगे आगतः

उपरितन अंशान् प्रत्येक स्तम्भे

लिखित्वा ज्ञातव्यम्।

२.३० गोष्ठी - सो. ति. नागराजः

रुग्णस्य कृते वैद्यस्य रोगनिदा

संशोधनविधानमिवास्माकं दृष्टिः

संस्कृतविषये।

प्राचीनभारते विजृम्भमाणं संस्कृत

मासीत्। तदुच्चपदं संस्कृतं

पुनः आरोहयितुं अस्माकं प्रयत्न

तत्र प्रथमसोपानं. यावत् पुनः

व्यवहारपथे संस्कृतं आनेतुं

सं. सं. शिबिर चालनम्।

मेरु स्थानात् संस्कृतस्य च्युते: कारणानि कानि? इति विचिन्त्यम्
केन हेतुना संस्कृतस्य अवनतिः जाता?

1. प्रादेशिक भाषानां प्राकृतादीनां वृद्धि:
2. पण्डितानां वैदग्ध्यपूर्णं संस्कृतं, तेन काव्य-शास्त्र रचनानि।
3. वैदेशिकानां आक्रमणं, प्रभावाः। आंग्ल शासनस्य कुक्रमाः विद्याभ्यास पद्धतौ लार्ड मकाले इत्यादिभिः योजिताः।

इतरासां भाषाणां दृष्टं फलम्। किंतु दृष्टमपि फलम् संस्कृतस्य निरूपकैः प्राचीनैः।
संस्कृतस्य, इदं वैलक्षण्यं परिरक्षितव्यम्।
अदृष्टोत्पत्ति पर्यन्तं साहाय्यार्थं संस्कृतं पाणिनि प्रभृतिभिः संस्कारितम्।

8

4. संस्कृतस्य भाषाविस्तारः परिमित
अन्यभाषातः पदानां आदानाभा
-वात्।

5. विधर्मीभिः भारतीयसंस्कृतिं
रक्षितुकामिभिः आरचित कठोर-
नियमेभ्यः संस्कृतस्य ह्रासः
अपि प्रासङ्गिकतया सञ्जातः।
अपात्राय न देयं इत्यादि
स्मृतिवचन परिणामः एषः।

6. उद्योगावलम्बितशिक्षणपद्धत्या
संस्कृतस्य हानिः।

प्राणिजीवतः मनुष्यजीव
नं कथं भिन्नमिति सदा अवधा-
-तव्यम्।
महतापुण्यपण्येन क्रीतेयं कायनौ
यावन्नभिद्यते दुःखाम्बुधिं तर
कुं इदानीं तु दुःखज्ञानमेव नास्ति

6

इष्टफलसंप्राप्तिः पाश्चात्यानाम्।

7 केवलं विद्यार्थिभिः अंकप्राप्त्युपायमिति संस्कृतं अन्यभाषा माध्यमेन अधीयते।

8. संस्कृताध्ययनं प्रति प्रतभावस्य अभावः।

कुशाग्रेणैकबिन्दुना (समुद्रस्य जलस्य अन्यत्र आहरणं यथा।)

रोगनिदानापेक्षया परिहारोपायानां अन्वेषणं श्रेयः।

9 सार्वजनिक जागृतिः - संस्कृतसंपत्तौ शासनस्य सहकारिता। यतो हि शासनमाश्रित्य ~~बहवः~~ बहूनि क्षेत्राणि प्रभावितानि।

२०

४.०० गणशः गोष्ठी (४ गणाः)
संस्कृते सम्भाषणे अवधेयाः अंशाः।
लिंग पुरुष वचनादिषु नियमाः
संस्कृतसम्भाषणे सामान्याः दोषा

५.२५ गणशः गोष्ठी (२६ गणाः)
शिबिरचालने संस्कृतप्रचार कार्ये
सेवाव्रतिनीनां कार्यानुभवाः

६.०० संस्कृतसंभाषणशिबिरम् -
पूर्वार्धम् - गतदिनस्य पाठस्य अनुवर्तनम्

भारतस्य। कर्नाटकस्य।
रामस्य। पार्वत्याः
संख्यावाचकानि। कति।

मम गृहे ६ जना: सन्ति । भवत: गृहे नाति?
मासे कति दिनानि ।

सप्तमी विभक्ति प्रयोग:
गृहे । स्यूते । हस्ते । भुजे । मस्तके
पेटिकायाम् ।
बेंगलूरु नगरे । आग्रानगरे ।
षड्वादने । कदा इति पृच्छन्तु ।
कुत्र, किम् इति च पृच्छन्तु

उत्तरार्धम् — ते बालका: । ते के?
ता: -- । ता: का: ?
एते बालका: । ते शिक्षका: ।
बहुवचनरूपाणि
सुधाखण्डा: । दन्तकूर्चा: । कुञ्चिका: ।
लेखन्य: । शिक्षिका: । बालिका:
वृत्तपत्रिका: । ।
अहं । वयं । भवान् - भवन्त: ।
भारतीया: । देशभक्ता:
भवती - भवत्य: ।
एतानि - तानि ।

तरुणाः गच्छन्ति । -- आगच्छन्ति
बालिकाः गच्छन्ति ।
उत्तिष्ठन्ति । उपविशन्ति ।
गच्छामि - गच्छामः ।
आगच्छामः ।
आगच्छतु — आगच्छन्तु
लोट्‌लकारे बहुवचनं च
ददाति । स्वीकरोति । नयति ।
स्थापयामि । पिबति । ताडयति
औपचारिक शब्दाः ।
सुप्रभातम् । हरि ओं ।
धन्यवादः । क्षम्यताम् ।
चिन्ता मास्तु ।

छात्रैः सम्भाषणम् - दिनचरीकपत्र
संख्यावाचनम् ।
घटीअवेक्षणम् ।

अतिपेरागमनम् - प्रात्यक्षिका ।
प्रथमं शिक्षकैः ततः छात्रैः ।

धावामि। गायामि। नर्तनं करोमि
पश्यामि। शृणोमि। वदामि।
रोदनं करोमि। हसामि।
कथा – रन्तिदेवस्य।
विद्यार्थिषु प्रत्येकः वाक्यद्वयं उक्तवान्

९.२५ अनौपचारिकी सभा
विश्वासः

२०-२०-९२

८.४५ ~~शिबिरस्य~~
वर्गार्थिभिः सं.सं. शिबिराणां
चालनम्।

गणत्रयं कृतं शिबिरार्थिनां।
प्रत्येकगणस्य शिक्षकद्वयं
एकहोरावधि बोधयन्ति स्म इति
व्यवस्थितम्।

२२.२५ चक्रगोष्ठी - चर्चा।
विषयः - संस्कृताध्ययनं किमर्थम् ?

१ * स्पष्टोच्चारणसिद्धिः
२ * परिपूर्णा, शुद्धा, पुरातनी भाषा इति
३ * परिष्कृतविचाराः - शाब्दबोधाय
धातोः शब्दः वस्तुस्वरूपात्मकः
४ * संस्कृतसाहित्यज्ञानार्थं - सम्पद्भरितं साहि
५ * शास्त्रादिषु ज्ञानवर्धनम् - व्याकरणादि
६ * इतर भाषाप्रभुत्व सम्पादनम्
७ * भाषानां तौलनिकाध्ययनार्थम्
८ * नूतन शब्दनिर्माणयोग्यतासिद्धिः
९ * Computer उपयोगः सम्भाव्यः
१० * भूमित्राणमिति कृत्वा भारतेयाः भारतेय
भाषां संस्कृतं अध्येरन्
११ * नान्यदृष्टं संस्कृताश्रितं पुण्यप्रदं,
संस्कृत भाषायां यौगिकी शक्तिः
१२ * गैर्वाण्याः आनन्दानुभूत्यै for the sheer delight of speaking Skt
१३ * भारतीयसंस्कृतेः साक्षात्परिचयार्थम्।

२४ * राष्ट्रिय भावैक्यसाधनम् इति ।
वैविध्ये ऐक्यं द्रष्टव्यम् ।
२५. * संस्कृतेतरेषु भाषासु यत् नास्ति ।

२०.०० विश्लेषण - परिशीलन गोष्ठी ।
पूर्वतनस्य वर्गार्थिभिः चालितस्य
स.सं. शिबिरस्य विमर्शः ।
प्रथमं शिक्षकाणां अनुभवकथनम् ।
ततः बोधने गुणात्मकाः अंशाः ।
अन्ते परिमार्जनीयाः अंशाः उक्ता

२.३०-३.३० गणशः गोष्ठी (परा-पश्यन्ती-मध्यमा-
वैखरीति चतुष्टये )
व्याकरणपाठः - सामान्यदोषपरिमार्ज
-र्ज्ञः ।

४.००-५.०० गोष्ठी - विन्यासः
भाषाध्ययनस्य इतिहासः
I. व्याकरणानुवाद पद्धतिः
Latin भाषायाः यथा तथैव संस्कृतस्य
अध्ययनार्थं विधानं अनुसृतम्
तदेव अद्यापि अस्माभिः अनुक्रियते
तन्नाम Grammar & translation
method

II प्रत्यक्षपद्धतिः Direct method

1. Target language (शिक्षणीया भाषा) द्वारा एव सर्वव्यवहारः कक्ष्यायां कर्तव्यः।
2. व्यवहारार्थं आवश्यकं (परिमितः) केवलं पाठ्यते। व्यवहारोपयोगिता (शिक्षणीय भाषायाः) मात्रं पाठ्यते
3. मौखिकाभ्यासाः मौखिक द्वारा क्रियन्ते। दिनोपयोगीनि वाक्यानि बोध्यन्ते। Speaking skill is developed. व्याकरणांशाः उदाहरणद्वारा
4. विशदीक्रियन्ते न तु तानि सूत्राणि एव उपदिश्यन्ते क्रमशः।
   Example first, grammatical rules next. ~~(whereas~~ (It is vice versa in another method - G. & T method)

   नूतनाः पाठ्यांशाः मौखिक द्वारा एव बोध्यन्ते। वस्तु - चित्र - सन्निवेश
5. निर्माण प्रदर्शन द्वारा नूतनानां शब्दानां परिचयं कारयेति।

(6) अवगमनपूर्वकं पठनं क्रियते।
with ~~app~~ comprehension. Ask questions in target language about a long sentence and elicit answers.

(7) उच्चारणे विशेषः प्रयत्नः क्रियते॥
शिक्षकः सावधानं उच्चरते।

(8) शुद्धतायाः अवधानं अनन्तरं क्रियते। प्रथमं यथेच्छं ब्रुयुः।

(9) Never translate, always demonstrate (either by himself or with the help of instructors or the students). Dont explain much.

(10) न विवृणोतु, अभिनयतु।

(11) भाषणं माकरोतु, प्रश्नान् पृच्छतु

(12) कदापि दोषान् मा अनुकरोतु अपि तु परिष्करोतु

(13) कदापि केवलं शब्दं मा भाषतां वाक्ये ~~अत्र~~ शब्दान् वाक्ये उपयुज्यताम्

(14) कदापि अधिकं मा भाषतां, ~~छा~~ छात्रान् भाषयताम्।

Don't use text book; use lesson-plans.

(15) कदापि पाठ्यपुस्तकस्य उपयोगं न करोतु। lesson plan पाठ्ययोजनां उपयोजयतु।

The approach is more practical than hypothetical.

(16) पाठ्यांशान् मा मिश्रीकरोतु।

Stage by stage is the lesson plan done.

(17) कदापि अधिकवेगेन मा पाठयतु सावधानं पाठयतु

(18) अति वेगेन, अति मन्देन, अत्युच्चैः अति शनैः न पाठयतु।

(19) कदापि कक्ष्यायां असहनां मा प्रदर्शयतु। Take it easy

Demerits

1. शिक्षकेन सर्वज्ञेन भवितव्यम्।
महत्कौशलयं अपेक्षितम्।
2. पाठ्यांशान्, सर्वाः क्रियाः प्रदर्शयितुं न शक्यते।
3. Target language एन उपयोक्तव्यम् इति ~~कष्ट~~ कष्टाय।
4. There is no followup progra-
-mme like reading or writing. ज्ञाता भाषा विस्मर्यते।

अस्माकं सं.सं. शिबिराणां इतिहास

६-२९ क्रीडादिकम् - २९ गणाः
सेवाव्रतिन्यः नायिकाः

६.०० संस्कृतसंभाषणशिबिरम् - ३

नामपदानां, क्रियापदानां (लट्)
बहुवचनरूपाणि।
कुत्र - सप्तमी विभक्तिरूपाणि
कदा
इदानीं श्वः परश्वः
द्वितीया विभक्ति प्रयोगः
क्षौरकपत्रैः
पुरतः पृष्ठतः अधः उपरि
वामतः दक्षिणतः
मन्दम् शीघ्रम् शनैः उच्चैः
सम्यक् अस्ति - सम्यक् नास्ति
आरोग्यार्थं मनरञ्जनार्थं किमर्थं
ज्ञानार्थं

किं किमर्थं कुत्र कति कदा कथं
कुतः - सप्त ककाराः

परस्परं प्रश्नादिकं कर्तुं 5 निमेष-
-स्य अवकाशः दत्तः।

कोष्ठकं वितरितम्।
कतिपयैः पाठितम्। कतिपयैः
कोष्ठकसहायेन वाक्यानि
रचयितानि।
उपाहारपर्यन्तं दिनचर्यावर्णनम्
उपाहाराणां नामानि।
स्थालिका, दर्वी, चषकः प्रदर्शित
भोजने खाद्यपदार्थानां नामानि
भोजनस्य प्रदर्शिनी -
सेवाव्रतिनीभिः।

२२-२०-९२

~~[illegible]~~ २.३० चक्रगोष्ठी – संस्कृतस्य प्रचारोपायाः।

* प्राचीनकाले संस्कृतस्य उत्कर्षता।
  इदानींतन अवनतिः। तस्य हेतवः चिन्तिताः।
  अमूल्यं स्वयं जीवति।
* अस्माभिः, परैः किं कृतम्
  संस्कृतोज्जीवनार्थं, प्रचारार्थं
  कृतानां कार्याणां इतिवृत्तानि –
  पाठशालाभिः, संस्थाभिः, पत्रिकाभिः,
  आकाशवाण्या, पत्रिकाभिः
  संस्कृतपत्रिकाभिः सर्वकारेण
  दूरदर्शनेन
* इतः परं किं करणीयमिति चिन्तनम्
  जनशक्तिकेन्द्रिताः कार्यक्रमाः।

८.४५ वर्गार्थिभिः सं.सं.-शिबिराणि चालिता[illegible]

२०.०० सं.सं. शिबिरस्य बोधनक्रमस्य
विमर्शः। परिशीलन गोष्ठी।

कथं कृतः (पाठः) इति अभिनीय,
तदनन्तरं कथं इतीत्य पाठकरणस्य
प्रात्यक्षिकं क्रियते चेत् लाभाय
भवेत्।

२२.२५ भाषाशोधन गोष्ठी -गणशः

९.३० सं. सं. शिबिरस्य बोधनविधानस्य
मनोवैज्ञानिकता the technique
and the thinking behind

परिचितशब्दाः प्रथमं ततः अपरि-
-चितानां बोधः यतः ----।
आरम्भे मध्ये च गानं, कुतः---।
सः सा (इति दूरस्थं निर्दिश्य)
इत्यादिनां पाठ्यबिन्दूनां ~~सा~~
साभिनयं पुनरुक्तिः किमर्थम्
विभक्ति बोधन क्रमे युक्तिः। एषा
उपयोगितामवलम्ब्य भवति।
रटनमपि (अन्ते) कारयामः
ध्वनि वैविध्यसहितं कारणं ----।
सन्दर्भाणां प्रात्यक्षिकाणि यतः---।
पुनःस्मारणार्थं प्रतिदिनं क्रियते यतः---
स्फोरकपत्रादिनां उपयोगः किमर्थम्
तत्रापि नूतनतया लिखितानि यतः...।

प्रथमदिने तत्र दण्डदीपः इति बोधित
स्य समीकृत्य सः दण्डदीपः
इति निर्देशयितुं कानि उदाहरणानि।

अस्ति - सन्ति भेदावगमनार्थं
के उपायाः। एकेन हस्तेन एकं द्वितीयेन
अनेकानि स्वीकृत्य बोधनम्

५.२५ क्रीडा दिनाम

६.०० संस्कृतसंभाषणशिबिरम् - ४

पूर्वाधिपूर्वपाठानुवर्तनम् प्रश्नपूर्वकम्

शब्दोपयोगः - एव इति
(पश्यामि - सः पश्यामि इति वदति
अस्मि यदि - तर्हि यथा तथा
तः - पर्यन्तं
संस्कृतेन वार्तां कुर्वन्तु इति देशः
निमेषपर्यन्तं कस्या विसर्जिता
उत्तरार्धम् - शब्दोपयोगः - अद्य आरभ्य
श्वः आरभ्य । स्य कृते ।
निगमस्य कृते उपनेत्रं ददामि (इति
उपनेत्रं ददाति) ।
स्फोरकपत्रैः स्य कृते - याः कृते ।
उपयोगः । भवतः कृते
भवत्याः कृते

अहं भगवान् - वरं पृच्छतुम्नु ।।
(मम कृते -- ददातु । इति वदन्ति ।)

आसीत् । आसम् ।
दृष्टवान् - दृष्टवती (कोऽपि केन)
एकः + एका - एकम् (वस्तूनि दर्शयित्वा)

९.२५ अनौपचारिकम्
काशी पुराणे काशी खण्डे प्रथमाऽ
ध्यायस्य पुण्यकथा उक्ता ।

---

अन्ये चिन्तनीयाः विनोद कार्यक्रमाः
१. वागीश्वरी पुत्तलिका ।
२. जांगुलिकस्य भूतेश्वरः ।
३. कर्नाटकाव्यस्य संस्कृतव्याख्यानम् ।
४. सुभिक्षो देशः अदक्षो राजा ।
५. साक्षिशिला ।

११-१०-९१

५.४५ प्रातःस्मरणम् - भारत एकात्मतास्तोत्र

६.८.४५ वर्गार्थिभिः सं.सं. शिबिरचालनम्

१०.०० पूर्वगतशिबिरसंचालनस्य विमर्शः

११.१५ गोष्ठी
उत्तमशिक्षकेन (भवितुमिच्छुना)
किं किं चिन्तनीयम् ?
उत्तमशिक्षकस्य लक्षणानि
पूर्वसिद्धता । वर्गे कथं
तस्य कौशलम् अपेक्षितम्

(1) सरलेन संस्कृतेन संभाषितुं समर्थः
भवेत् । पर्यायशब्देषु परिमिता
परिचितान् शब्दान् उपयुञ्जीत ।

(2) एकः शब्दः एकस्मिन् अर्थे ; एकस्य
अर्थस्य कृते स एव शब्दः ।
अयम् = एषः । अत्र = इह ।

(3) पाठबिन्दूनां क्रमशः चिन्तनं, विस्तरेण पूर्वमेव लेखनम्, लिखितं तत्र शिबिरे समीपे स्थापितव्यम्। छात्राणां सामान्य दोषाणां आवलिः, तेषां परिहारार्थं पर्यायानां उपायानां चिन्तनम्, तेषामपि लेखनम्। पाठयोजना - विस्तरेण, संक्षेपेणापि

(4) पाठ्योपकरणानां संग्रहः।

(5) शिक्षकस्य कक्षायां पूर्वोपस्थितिः। व्यवस्थाः कृष्णफलकादीनां पूर्वावलोकितव्याः। उत्पीठिका आसन्दादीनां, पीठानां (बोधनोपकरणानां स्थापनार्थं) सम्यक् व्यवस्थापनम्। अत्रापि पूर्वचिन्तनमावश्यकम्।

(6) विस्मृते पाठे टिप्पण्यवलोकने चातुर्यम्।

प्रत्यक्षेण टिप्पणी समीपगमनम्

पाठ्यवस्तूनां स्थापने अपि
अकारान्त पुल्लिङ्ग शब्दकानां वस्तूनां
एकत्व ( एक पङ्क्तौ ) , आकारादी
नां शब्दकानां एकत्व --- एवं
भवनु / नपुं. लिङ्गका : एकल -- एवम्
क्रमशः स्फीरकपत्राणि । कथाचित्राणि ।

छात्राणां उपवेशनम् समीचीनतया
चतस्र आकारेण । सर्वे
दृष्टि गोचराः भवेयुः । मध्ये
मार्गं छात्राणां । स्त्रीणां
पुरुषाणां प्रत्येकतः ।
शिक्षकस्य वेषभूषणे औचित्यं
शुभ्रतादि ।

(7) शिक्षके गुणाः
धैर्यं, क्रियाशीलता (चलनवलनादिकम्) आत्मविश्वासः, स्पष्टभाषणं

(8) अभ्यासकरणे अन्तःस्थितः भावः गृहीतः वा न वा इति मुख्यम्।

पाठ्यबिन्दूनां योजनक्रमे स्थितं चिन्तनं वेदितव्यम्।

बोधने एकैकस्य कार्यस्य पृष्ठभूमिः विज्ञेया।

'मम पाठनस्य परीक्षा करणीया' इति सदा शिक्षकेन अवधातव्यः।

६.०० संस्कृतसम्भाषणशिबिरम् - ५

क्रियापदानां एकवचन-बहुवचन-
रूपाणां परस्परं परिवर्तनाभ्यासः।
समयावेदनं दिनचर्यायाः, आवलय
साहाय्येन।
तृतीयाविभक्तिप्रयोगः। केनकेन।
सुधाखण्डेन। दण्डेन। लेखन्या।
'सह' 'विना'। 'अद्यतन' 'ह्यस्तन'
'इदानींतन' 'पूर्वतन'

उत्तरार्धम् - अस्ति - सन्ति - आसीत् - आसन्
मरीचिका।
करोमि स्म। खादामि स्म।
अभवत्।
-तवन्तः। -तवत्यः।
वस्त्राणां, वर्णानां, रुचीनां परिचयः।

९.२५ महती वृष्टिरागता। सर्वमुद्ध्वस्तम्।
अतः वर्गस्थानस्य पुरतः वर्तमाने
विद्यालये संस्कृतरूपकं अभिनीतम्।
'सुभिक्षो देशः अदक्षो राजा'।
वासुदेवः + म ए प्रभाकरः

२२.१०.९१.

७.०० श्रीसरस्वती पूजा।
बौद्धिकवर्गः अ.प. सुब्रह्मण्यमद्देन

९.०० मल्लूरं प्रति प्रस्थानम्

१०.०० मल्लूरौ स्वागत सभा

१०.४५ गोष्ठी - गणशः
व्याकरणपाठः

अश्रुतं शब्दं उच्चारयितुं यः
कोऽपि न शक्नोति इति
भाषाविदुषां सिद्धान्तः।
अतः श्रवणं प्रथमम्।

साम्प्रदायिके सं. शिक्षणविधाने
एतत् विपरीतं दृश्यम्।
तदर्थं विद्यार्थिनः बहुवर्षपर्यन्तं
संस्कृतमधीत्यापि संस्कृतेन सम्भा-
-षितुमशक्ताः दृश्यन्ते।
अतः हिं. सं. प्रतिष्ठानस्य शिक्षण-
विधाने सोपानक्रमः अनुसृतः।

भाषाभ्यासस्य चत्वारि कौशलानि Skills LSRW

2.30 उपन्यासः- श्री सो. ति. नागराजः
संस्कृते काव्यशास्त्रविदां तपः।

व्यवहारोऽपि फलम्, मुख्यं तु शास्त्रज्ञानम्

४.३० आशीर्वचनसभा

दातारः - वेदमूर्ति श्री
श्रीनिवासन घानिनः

विनीतवचनम् - श्री सो. ति. नागराज

६.०० शिबिरमुखे
संस्कृतसम्भाषणशिबिरम् - ६

कथा - चाणक्यस्य (कम्बलवृत्तान्तः)

७.२५ अनौपचारिकम्

२४.१०.९१

६.४५ प्रातःस्मरणीयम्

८.४५ वर्गार्थिभिः सं.सं. शिबिराणि।

१०.०० गोष्ठी - श्री सीताराम केदिलाय
परिचयात्मिका।

११.२५ विचार कणिका
श्री सीताराम केदिलाय

I अद्यतने समाजे उत्तमाः पुरुषाः दुर्लभाः
इति दुर्वार्तां निराकर्तुं उद्यतं हिन्दु
सेवाप्रतिष्ठानम्। योग्यानां अस्तित्वं
① प्रतिष्ठानं (अद्यापि) प्रदर्शयति।
② जीवनस्य सार्थकता सेवाभावे अस्ति।
③ सेवायां प्रत्येकः समर्थः इति।
तदेव जीवनव्रतं भवितुं अर्हति।
तथा सेवाव्रतीनां निर्माणे नियोजने
च प्रतिष्ठानस्य नूतनः संकल्पः।

Service missionary

⑨ सेवा इति शब्दः अपवित्रीकृतः।
उदरंभरणस्य उद्योगोऽपि सेवा इति
अपकल्प्यते। राजकीयकार्यविधिः
च सेवेति अपकल्पितः।
देवालये अर्चनादिकं सेवेति
कुख्यातम्। एवं विपर्यासः।
सेवायाः पवित्रीकरणं (पुनः)
प्रतिष्ठापनेन इष्यते।
सेवा ~~[illegible]~~ = कर्तव्यम्
(उदा - मातापित्रोः सेवा)
समाजं प्रति आनृण्यं विस्मृतम्
अहं पठामि इति मिथ्या।
वस्तुतः समाजः मां पाठयति ~~[illegible]~~
अस्य अहंभावस्य स्थाने कर्तव्यस्य
प्रज्ञा पुनराधातव्या।

II चराचरसृष्टिं प्रति दृष्टिः विहिता
चेत् सेवायाः बोधनं भवति।
परोपकाराय वहन्ति नद्यः...

गुरुकुलं भित्तिभिः निर्मितं नासीत्।
मदर्थं त्वमसि इति वृक्षादिकं मानवः वदति। अहंकारस्य अविवेकस्य प्रमाद एव। तावदेव नः, राक्षस इव वृक्षादिकं स छिनत्ति स्वार्थस्य पराकाष्ठता एषा।
नदीः, वृक्षान्, गाः प्रदर्श्य गुरुकुले सेवां बोधयन्ति स्म।
आधुनिकं शिक्षणं अपमार्गे नियोजयति स्वार्थी भ्रष्टो अभियन्ता, अमानुषो वैद्यः उत्पाद्यते।
उत्तमं सर्वं स्वस्मै, दूषितं परेषां कृते
(कार्बन डाइऑक्साइड) (केमिकल वेस्ट)
(हीटिंग इफेक्ट)
आर्या विस्मयति तस्मिन् काले।
∴ किमिति स्वार्थीयते?
यत्र यत्र निःस्वार्थता तत्र तत्र दिव्यता। गंगामाता, गोमाता, भूदेवी पुण्यभूमेः अस्याः परम्परा एषा।

मृत्योः मा अमृतं गमय
— एतत् ध्येयम्।

परोपकारः अमरत्वाय।
स्वार्थः पापाय, नरकाय, मृत्यवे

उपरि दृष्ट ज्ञानेन सेवाव्रतिनः
अपि उन्मीलय समाजसेवायां
नियोजयति हिं.सें. प्रतिष्ठानम्।

III प्रतिष्ठानस्य विविधानि क्षेत्राणि

1. निसर्गोरक्षणम्
2. वैद्यकीयम्
3. शिक्षणम्
4. संस्कृतम्
5. Counselling
6. योगविभागः

सामरस्यकारिण्यः भारतीयभाषाः संघर्षन्ते।
मातरं विना पुत्राः कलहायन्ते।
तथैव संस्कृतं विना भारतीय-
भाषाणां परस्पर कलहाः।
संसदि संस्कृतशिक्षणम् अत्र
उदाहरणम्

सत्यनारायणजातिया- करणसिंहः
संसदि संस्कृतेन प्रश्नोत्तरं जातम्।
तर्हि जातं स्वतन्त्रं भारतम्।

विज्ञानिनां स्फूर्तिदायकं वैदिक-
-संस्कृत साहित्यम्।

राजकारणपुरुषाणां, विज्ञानिनां,
अनक्षरज्ञाणां च कृते संस्कृतम्
उपयुक्तम् समर्थितम्।

बन्धूनां, विदेशीयानां विरोधिनां च कृते
संस्कृतं अपेक्षितम्।
जन-मन-संयोजकम् संस्कृतम्।
अतः संस्कृतं स्वीकृतं प्रतिष्ठानेन
एकतासाधनार्थम्।

जागृतिः राष्ट्रप्रज्ञायाः। तदेव
हिन्दुत्वस्य जागरणं नाम।
सेवा यथा तथैव हिन्दु इति शब्दोऽपि
अन्यथा गृहीतः। अपमूल्यीकृतः

स्फूर्ति
प्रतिष्ठानम्
जन्मभूमि
प्रतिष्ठानम्
उत्तिः

१.२५ अनौपचारिकम्

बधिरमूकेभ्यः वार्ता।
पुत्तलिकया व्यायामः।
हृदयं बहिः स्थाप्य शस्त्रचिकित्सा

धूमपानस्य लाभाः। (वार्धक्यं न भविष्यति, रात्रौ चोरस्य भयं नास्ति, शुनकाः दूरं तिष्ठन्ति,

"जागरूको भव"
— संस्कृतवीथीनाटकम्

२५-१०-९२

५.४५ प्रातःस्मरणीयम्
७.०० योगाभ्यासः

८.४५ शिक्षकैः सं. सं. शिबिराणि चालितानि
वर्गार्थिनां कृते शिबिरविमर्शन गोष्ठी

~~९.४५~~
१०.०० Lecture - Demonstration
Feedler's theory &
reciprocal leadership
+
डाक्टर जी महोदयस्य
व्यक्तित्वं विकसनं सिद्धान्तः

२२ २७ गोष्ठी

लक्ष्मीनारायणभट्टः

पुरातने भारते संस्कृतभाषा व्यवहारे आसीत् वा? तथा निर्णेतुं (आसीदिति समर्थयितुं) के आधाराः?

एतस्मिन् अन्तिम इति शब्दप्रयोग विषये ——
कम्भोज देशे एव भाषन्ते इत्यादि।
शवति (गच्छति इत्यर्थे) इति कम्भोजे एव प्रयोगः।
मम्माति इति सौराष्ट्रे (गच्छति
रंहति इति पूर्वदेशेषु (गच्छति)

कोऽस्य रथस्य प्रवेता? वैयाकरणैः
अहमस्य रथस्य प्राजिता - सूतः।
यदा सूतः दुःशब्दं प्रयुक्तवान् इति

ब्राह्मणं कुशलं पृच्छेत्

अनबन्धु मनामयम्।
वैश्यं तु क्षेममित्येव
शूद्रमारोग्यमेव च।

काकली = अस्पष्टं शब्दोत्पत्तिः।

वसन्तसेनायाः संस्कृतोच्चारणं प्रति मैत्रेयस्य परिहासोक्तिः।
केषुचन प्रदेशेषु स्त्रीजनानामपि संस्कृतेन संवादयितव्य आसीत्।

अभिधानः भिन्नाः लक्षणादयः
हेतवः आगताः व्यवहारतः।

स्त्रीवत् मानादीः इति
महाभारतादिषु उक्तयः।

२.३० गोष्ठी चमूकृ

1 संस्कृतप्रचारार्थं शिबिरचालनम्

२ सामाजिकव्यवहारे संस्कृतप्रचारार्थं उपायाः

3 पत्रिकासु संस्कृतविषये संस्कृतेन च (अन्येषु अक्षरेषु) लेखनानि।

४.०० संस्कृतवीथीनाटकम्

५.२५ रसप्रश्नः।

६.०० संस्कृतसम्भाषणशिबिरम्

~~५.२५ गोष्ठीकार्याणि~~

१६-१०-९२

५.४५ प्रातः स्मरणीयम्
६.४५ योगाभ्यासः
८.०० बालेभ्यः सं. सं. शिबिराणां चालनं अन्यैः।
८.४५ वर्गाधिपानां गोष्ठी - चमूकु" आबाशिक्षणेऽभ्य
सामान्यतः पाठकः (शिक्षकः) कर्ता
इति लोके श्रूयते।
किंतु सं. सं. शिबिरे शिक्षकः कर्ता न
छात्र एव कर्ता। (सं भाषां अधिगच्छति)
शिक्षकः साहाय्यकः।
शिबिरे एकघण्टानन्तरं छात्रैः किं
निरीक्ष्यते? पठितं अंशं छात्रः
स्वतः प्रयोक्तुं शक्तः वा इति।

अभ्यासाः करणीयाः व्यक्तिशः
समूहतया गणशश्च।
कथा द्वारा कथं पाठ्यबोधनं कर-
णीयम्?
प्रश्नादिकैः। प्रत्ययश योजनानि।
पात्राणां अभिनयः प्रदर्शयितव्यः।
विभक्तीनां परिवर्तनम्।

संकेतनामपदानां स्थाने अन्येषां नाम-पदानां नियोजनम्।
रमेशस्य जनकः गृहं आगच्छति।
= नरहरेः पिता गृहं आगच्छति।

Chain Drill शृंखलाभ्यासः

Ex.g — A to B भवतः नाम किं?
B मम नाम B to C भवतः नाम किं?
C मम नाम C. to C भवतः नाम किम्

A to B रामः श्वः न आगमिष्यति।
B to C — " —
C to D — " —

वाक्यरचने सहजध्वनीनां प्रयोगे अपि अवधानमुचितम्।

भट्टः बाल्ये एव कुमारसंभवम् पठितवान्।

ಹುಡುಗರ ಮುಂದಿರುವ ವಸ್ತುಗಳ ಉದಾಹರಣೆ
ನಿದರ್ಶನ ನೀಡುವುದು ಒಳ್ಳೆಯದು. ಇತರ
ಹಿಂತಿರುಗಿ ನೋಡುವಂತೆ ಮಾಡುವುದು. ಇದರ
ಮೇಲಿನ ನಿಯಂತ್ರಣವನ್ನು ಸಡಿಲಿಸುತ್ತದೆ.
ಪಾಠ್ಯೋಪಕರಣಗಳು ಇದ್ದಂತೆ ಮುಖ್ಯ.
ಪೇಪರಿನ ಹಿಂದೆ ಮುಂದೆ ಚಿತ್ರಗಳನ್ನು
ಅಂಟಿಸಿ ಏಕ-ಬಹು ಪಟದ ಪ್ರಯೋಗ
ಗಳನ್ನು ಮಾಡಿಸಬಹುದು.

पाठ्योपकरणनिर्माणम् ಸುಲಭತರ
ಚಿತ್ರ ಮಾದರಿ.

शिक्षके अपेक्षिताः गुणाः।
ಗೊತ್ತಿಲ್ಲದ್ದನ್ನು ಗೊತ್ತಿಲ್ಲವೆನ್ನಲು ಸಂಕೋಚಪಡಬೇಡ
ಹಲವು ಸಲ ಹೇಳಿಕೊಟ್ಟರೂ ತಿಳಿಯದವರ
ಬಗೆಗೆ ಅಸಮಾಧಾನ ಸಲ್ಲ.

Random ಆಗಿ ಪರಿಗಣಿಸಬೇಕಾದದ್ದು – ನಿರ್ದಿಷ್ಟ
ಅವಧಿಯಲ್ಲಿ ಶಿಕ್ಷಕನು ನುಡಿದದ್ದು ಹಾಗೂ
ವಿದ್ಯಾರ್ಥಿಗಳು ನುಡಿದದ್ದು ಯಾವ ಪ್ರಮಾಣದ
ಮಾತುಗಳಲ್ಲಿವೆ ಎಂಬುದನ್ನು ಗಮನಿಸಬೇಕಾಗಿದೆ
ಇದನ್ನು ಲೆಕ್ಕಮಾಡಲು ಮಿತ್ರರಿಗೆ ಹೇಳಬಹುದು.

2) प्रतिदिनं 1½ घण्टा अथवा २ घण्टा इति 15 – 20 दिनपर्यन्तं शिबिरं चालयितुं शक्यते वा।

3) समारोप सभादिकानां कार्यक्रम आयोजने भाषणेषु च शिबिरार्थिनाम् अधिकं पात्र स्यात

4) गतेन कालेन शिबिरे छात्राणां संख्या न्यूना भवति चेत किं करणीयम? अधिका अपि संख्या भवेत। वयं प्रयत्न सिद्धाः भवेम।

5) विभिन्न स्तरेषु भिन्नवर्गाणां कृते शिबिरचालनम।

6) शिबिरात्पूर्वं प्रचारोपायाः। पञ्जीकरणम तेषां संकेतस्वीकारः। अनुवर्तनपाठाः। पत्रालय द्वारा संस्कृतपाठनस्य विवरणि कृतानि।

7) शिबिरस्य कृते शुल्कं न स्वीकर्तव्यं
विद्यादानं भारतीयं न तु विद्यावाणिज्यम्
निश्शुल्कमपि शिबिरान्ते निधि-
समर्पणकार्यक्रमं नियोक्तुं शक्यते।
किंतु तत्सर्वं हिं. से. प्रतिष्ठानं गच्छेत्।
व्यवस्थार्थं अन्यं संग्रहं कुर्वन्तु। शिक्षकेभ्यः
commission कदापि न देयम्।

8) केन्द्रकार्यालयनिर्माणार्थं बेंगलूरुनगरे
कृतस्य प्रयत्नस्य विवरणं दत्तम्।
तत्र यदा कदापि संस्कृतभाषाविषये
शिक्षितुं संशोधयितुं प्रशिक्षणं
प्राप्तुं शास्त्रादिकानां अध्ययनार्थं
दृश्यश्रव्योपकरणानां उत्पादनार्थं
च कार्यालयः आयोजितः।

२२.२५ गोष्ठी - महाबलेश्वर भट्टः

२.३०

४.०० उपन्यासः - तु. ना. प्रभाकरः
न्यायालये संस्कृतस्य स्थान-
रक्षणम् अस्माकं संघर्षः

६.२५ अनौपचारिकम् ।
वर्गार्थिनां संकेताः वितरिताः ।
परिहासप्रशस्तिप्रदानम् ।

२७-१०-९२

५.४५ प्रातःस्मरणीयम्
७.०० योगाभ्यासः

८.२५ प्रश्नोत्तर गोष्ठी

चमूकृ
महा॰ भट्टाः

(1) संस्कृतं अंतरा कानि अन्यानि सेवा कार्याणि क्रियमाणानि सन्ति, हिन्दुसेवाप्रतिष्ठानतः ।

[illegible]

(2) संघे कार्यकर्तारः/पदाधिकारिणः कथं संस्कृतकार्यं कुर्युः?

(3) कुन्दापुरे चालितस्य संस्कृतसङ्गमस्य कार्यक्रमस्य उद्देशाः, परिणामाश्च

उद्देशाः — (1) अस्माकं कार्यकर्तृनिर्माणसामर्थ्यं ज्ञातुमासीत्।

(2) अल्पेन कालेन अधिकसंख्याकाः जनाः शिक्षिताः भवेयुः वा।

(3) संस्कृतप्रचारः अपेक्षितः।

(4)

[illegible] (1) शिक्षणे नाना प्रयोगाः कृताः। पद्यपुस्तकं विना बोधनं इत्यादि।

(2) अधिकसंख्याकाः कार्यकर्तारः शिक्षकाश्च नियुक्ताः।

[illegible] - 8778 जनाः संस्कृतं शिक्षापिताः।

(4) येषां संस्कृतगन्ध एव नास्ति तादृशानां उपेक्षितबन्धूनां मध्ये संस्कृतप्रचारः कथं करणीयः।

(5) अन्यमतीयाः संस्कृतं शिक्षितुं आगच्छेयुः विशिष्य तेभ्यः संस्कृतज्ञानेन किं प्रयोजनं ~~[illegible]~~ इति पृष्टे किं उत्तरम्?
material utility नास्ति इति (अर्थलाभः न भवति) ~~[illegible]~~ आक्षेपस्य उत्तरं चिन्तनीयम्।
अर्थलाभार्थं एव वयं सर्वं कार्यं कुर्मः वा? तेषु ~~[illegible]~~ एकतमः संस्कृतम्।

२०.२५. अनुभवकथनगोष्ठी
मानवीया: यादवराव जोशी

१. उत्तरप्रदेशात: वाराणसीत: स्वामी

कार्ये एतादृशं आन्दोलनं सामान्यजनानां मध्ये नास्ति। सेवाव्रतीनां प्रकल्पनं अपि अत्यं नूतनम्।

२. निरारवा, नागपुर.
अत्र आगमनानन्तरं गृहमेव विस्मृतवती।

३. पद्मनाभ अडिगः, कर्नाटकम्
संस्कृतज्ञानं वर्धितं, कर्तव्यप्रज्ञा जागृता बन्धुभावं च उत्पन्नम्। एकात्मता दृष्टा संस्कृतं अध्येतुं शक्यमिति भावना आगता

४. सुबोधकुमार, आन्ध्रप्रदेश.
अहं एकाकी इति भावना नष्टा। आत्मविश्वासः वर्धितः

५ वेणुगोपालः, तमिळनाडु

सम्प्रदायबद्धोऽपि संस्कृतकार्यं कर्तुं शक्यते इति विश्वासः आगतः। गृहगमनं स्मृत्वा दुःखं भवति। शिक्षणविधाने नूतनत्वं उपयोगाय दृष्टम्। व्याकरणं सुलभतया अध्येतुं बोधयितुं कल्पना आगता। भिन्नभाषात्वं कदापि अनुभूतम्।

६

कर्नाटकम्

समयप्रज्ञा प्ररूढा। नूतन बन्धुवर्गं प्राप्तवान्। वात्सल्येन पूर्णान् शिक्षकान् प्रथमवारं दृष्टवान्।

७

चन्द्रभूषण, गुजरातः

संस्कृतभाषा यावती सुलभा इति अत्रागत्य ज्ञातवान्। वसुधैव कुटुम्बकम् इति च अत्रागत्य (?) अनुभूतवान्।

के छात्राः के शिक्षकाः इत्येव

भेदः विस्मृतः।

८ उमा, (हासन) कर्नाटकम्

कीणे पुण्ये श्लोकानेन अस्माभिः स्वग्रामेण नाटयते इव मन्ये।

९

गृहं वसतिः ज्ञानमिति त्रितयमपि अ
सुसम्पन्नम्। न यातुमिच्छामि पुनः स्वगे

१० संजय, (खेडा) गुजरात:

समुद्रं दृष्ट्वा लङ्कां जिगमिषवः रामानुचराः इव वयं संस्कृतं ज्ञातुं भीताः। इयती अवस्था शिक्षका जाम्बवान् इव मर्मवेदिनः। यद्यपि नित्यकार्ये कार्यं करोमि अहमपि संस्कृत
संस्कृतस्य सेवायां कर्तुं समर्थः इति

२१ सदाशिव भट्टः, कर्नाटक
आगमने संकोचः आसीत इदानीं
प्रतिगन्तुं दुःखं अनुभवामि।

२२ नन्दकुमारः, केरलम्
संस्कृतं व्यवहारा भाषा भवितुं नार्हति
इति चिन्तितवान् पूर्वम्। इदानीं सा
भ्रमा इति दृढीकृता।

२३ देवी, कर्नाटक
गेहे स्थित्वा यत् उच्चानुसन्धानं
आसीत् तत् गतम्। अहं अणोरणीयान्
अतत्या: महतो महीयांसः।

२४ मालती, तमिळ्नाडु
आरब्धमुत्तमजना न परित्यजन्ति इति
वाक्यस्य निदर्शनं अत्र कार्यकर्तृषु
दृश्यते।

२९. वागीशः (मंगलूरु) कर्नाटकम्
संस्कृतभाषा महान् वृक्षः। अस्य छायायां क्रीडन्तः फलानि खादन्तः वयं भाग्यिनः। यदि वयमेव सुखिनः, तर्हि स्वार्थिनः भवेम। अन्यान् च अत्र आनयेम। तदा ज्ञानस्य सार्थकता।

२८. श्रीनिवास (धारवाड), कर्नाटकम्
सेनाप्रार्तिः भवितुं मनः भवति। स्वग्रामे प्रचारकार्यं करोमि।

२७. गुरुमल्लदेव, कर्नाटकम्।
गर्दभस्य इव मम आयुरपि २५ वर्षाणि व्यतीतानि निरर्थकाणि। निवृत्तप्रायेण मया अत्रागतेन किं प्रयोजनमिति चिन्तितवान्। दैवात् अत्र अहं आगतवान्। समग्रं संस्कृतपूर्णं शिबिरं इदानीं प्रथमतया दृष्टम्। सुशिक्षितानां सौहृदयपूर्णे वातावरणे अपूर्वं अनुभवं प्राप्तवान्।

पद्यार्धेन प्रवक्ष्यामि
संप्रशिक्षणवर्गोऽयं प्रज्ञाचक्षुरबोधयत

यादवराव जोशी –
हिन्दुराष्ट्रमिदमिति समर्थ्य आजीवनं कार्यं कृतवान डाक्टर जी। हिन्दुः जाग्रतः चेत् अस्य राष्ट्रस्य अपि अभ्युत्थानं भविष्यति इत्याह। अत्र नैकानि उदाहरणानि दृष्टानि। एकतायाः सूत्रं हिन्दुत्वे अस्ति तदस्ति च संस्कृते। समग्रभारतं अस्ति संस्कृतसाहित्यम्। राष्ट्रजागरणार्थं संस्कृतं उपयोज्यम्।
एतद्देशप्रसूतस्य ...
एवं अस्माकं विश्वस्तरे दायित्वं सदा स्मरणीयम्। भवतां अनुभवकथनेन मम विश्वासः अवर्धत। संस्कृतकार्यं राष्ट्रियकार्यमेव। स्वप्नेऽपि राष्ट्रं राष्ट्रं इति जपः भवतु।
अनेन देहेन चक्षुर्भ्यां संघटितं

चमूरु
इतः परं स्वक्षेत्रं गत्वा वयं किं किं कर्तुं शक्नुयाम ?

१ प्रभुलिंगः, बेंगलूरु
पूर्वमेव एतादृशं वर्गं आगत्य अधीतवानस्मि इदानीं इमं शिबिरं आगत्य मम विशेषः लाभः सञ्जातः
२ गोविन्द पाण्डेय, केरलम्
सामान्यजनान् संस्कृतशिक्षणे प्रेरयामः

३
अनिर्वचनीयं आनन्दं वयं प्राप्नुवन्तः। समाजस्य कृते मम दायित्वं किमिति सदा ध्येयम्।
४ गुरुपदचैतन्यः
अस्माकं सर्वेषां अनुभवः एकधा एवासीत्। छात्रान् कथं शिशून् इव लालयित्वा पाठनीयमिति अत्र अवगतम्। विनयस्य कारणं विद्या इति लोकोक्तिः अत्र प्रत्यक्षिता।

2.30 गोष्ठी – अग्रिमकार्यचिन्तनम् ।

समारोप बौद्धिकम् भाषणम्
– चं.मू.कृ.

Board before a hotel
[ If you are satisfied, please tell others
[ If you are not, please tell us.

वर्षस्य सार्थक्यं संपद्यते अग्रे
अस्माकं क्रियमाणैः कार्यैः ।
पन्थानानि कानि कानि ?
समस्याः काः ?

R&D उद्घाटितव्यम् । New words coinage
अग्रिम ध्येयं बृहत् भवेत् ।

1. संस्कृत सम्भाषणं
a. असहकारान्दोलने चरखा चालनं इव
b. प्रतिदिनं होम इव आर्यसमाजस्य
c. 20 minutes T.M.

अस्माकं पद्धतेः नाम —
सरल संभाषण पद्धतिः
प्रशंसावचनैः न उत्तारिताः भवेम

नूतनरक्तसंकलनेनैव देहस्य
जीवन्तिका।
सं.सं. शिवरं नाम वृष्टिः।
तेन भूमिः सिद्धा भवति।
अनन्तरमपि कार्यं बहु अस्ति।
कर्षणं, बीजवपनं इत्यादि।

श्रीरामकृष्णस्य सन्देशं लोके
प्रतिपादयितुं आग्रहः आसीत्
अस्माकं केवलम् — स्वामी विवेकानन्दः।
Bulldozer इव अग्र एव गच्छेत्
Pioneer your way
you're the pathfinder.

मानसिकसिद्धता।

Find a mission for your life.

अमानुषं घटनं दृष्ट्वा राजाराममोहन -

- रामस्य जीवनं ध्येयं संकल्पितम् ।

One life - one mission.

दुःखं क्रियायाः कारणं भवतु ।

सवाल लाख से एक लड़ो

- गुरु गोविन्द सिंहः